न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः।
भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥६९॥
अध्येष्यते च य इमं धर्म्यं संवादमावयोः।
ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥७०॥
श्रद्धावाननसूयश्च शृणुयादपि यो नरः।
सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयात्पुण्यकर्म्मणाम्॥७१
कच्चिदेतत् श्रुतं पार्थ त्वयैकाग्रेण चेतसा।
कच्चिदज्ञानसम्मोहः प्रनष्टस्ते धनञ्जय ॥७२॥

यः पुनरिमं संवादमन्येभ्य उपदेक्ष्यति, स मे सर्व्वान्तर्यामिणो भुवि प्रियकार्य्यं साधयिष्यतीत्याह न चेति। तस्माद्गीताशास्त्रोपदेष्टुर्न च मनुष्येषु कश्चिन्मे मम प्रियकृत्तमः, तस्मादन्यः भुवि लोके मे मम प्रियतरो न च भविता। ६९।

अथ शास्त्रस्याध्येतुः फलमाह अध्येष्यते इति। य इममावयोः धर्म्यं धर्म्मादनपेतं संवादम् अध्येष्यते च तेनाध्ययनरूपेण ज्ञानयज्ञेन अहं सर्व्वान्तर्यामी इष्टोऽभ्यर्च्चितः स्याम् इति मे मम मतिर्निश्चयः। ७०।

श्रोतुः फलमाह श्रद्धावानिति। यो नरः श्रद्धावान् श्रद्धायुक्तः अनसूयः असूया दोषदर्शनं तद्विरहितश्च सन् इमं संवादं शृणुयात्, सोऽपि पापान्मुक्तः पुण्यकर्म्मणां शुभान् लोकान् प्राप्नुयात्। उक्तञ्चाचार्य्येण प्राक्—"अन्ये त्वेवमजानन्तः श्रुत्वान्येभ्य उपासते। तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः॥" (१३।२५) इति। ७१।

अधुना श्रीमन्तमर्ज्जुनमधिकस्योपदेशस्यावश्यकतास्ति न वेति बुभुत्सया पृच्छति कच्चिदिति। हे पार्थ, त्वया एकाग्रेण चेतसा कच्चित्

अर्जुन उवाच—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत ।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ॥७३॥

सञ्जय उवाच—

इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ।
संवादमिममश्रौषमद्भुतं लोमहर्षणम् ॥७४॥

व्यासप्रसादाच्छ्रुतवानिमं गुह्यमहं परम् ।
योगं योगेश्वरात् कृष्णात् साक्षात्कथयतः स्वयम् ॥७५॥

राजन् संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ।
केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥७६॥

किम् एतच्छ्रुतम् ? हे धनञ्जय, कच्चित् किं ते तव अज्ञानसम्मोहः प्रनष्टः अपगतः ? ७२ ।

आत्मनः कृतार्थतां स निवेदयति नष्ट इति । आत्मतत्त्वविषयको मोहो नष्टः अपगतः, स्मृतिः आत्मस्वरूपसम्बन्धिनी लब्धा, गतसन्देहो विगतसंशयः सन् स्थितोऽस्मि तव शासने, तव वचनं निदेशं करिष्ये पालयिष्यामि । ७३ ।

कथासम्बन्धप्रदर्शनार्थं सञ्जय उवाच इत्यहमिति । इति एवम् अहं महात्मनः वासुदेवस्य पार्थस्य च इमं लोमहर्षणं रोमाञ्चकरम् अद्भुतमलौकिकं संवादमश्रौषम् । ७४ ।

व्यासेति । व्यासप्रसादात् व्याससंज्ञामितयोगप्रभावात् इमं परं गुह्यं त्रयाणां योगानामेकतारूपं योगं साक्षात् न तु परम्परातः योगेश्वरात् योगाचार्य्यात् कृष्णात् स्वयं कथयतः श्रुतवान् । ७५ ।

राजन्निति । हे राजन्, केशवार्जुनयोरिममद्भुतमलौकिकं पुण्यं पवित्रं संवादं कथोपकथनं मुहुर्मुहुः संस्मृत्य संस्मृत्य वारं वारं स्मरणैः हृष्यामि हर्षं व्रजामि च । ७६ ।

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ।**
**विस्मयो मे महान् राजन् हृष्यामि च पुनः पुनः ॥७७**
**यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।**
**तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥७८॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे मोक्षयोगो नामाष्टादशोऽध्यायः ।

तच्चेति । तच्च हरेः अद्भुतं लोकातीतं रूपं विश्वरूपं संस्मृत्य संस्मृत्य मे मम महान् विस्मयो जातः, पुनः पुनः हृष्यामि हृष्टलोमा भवामि च । ७७ ।

अधुना समरेऽस्मिन् कं पक्षं विजयश्रीरनुपक्षीष्यति तदाह यत्रेति ॥ यत्र पक्षे योगेश्वरः कृष्णः, यत्र पक्षे पार्थः धनुर्धरः गाण्डीवधन्वा, तत्र पक्षे श्रीः राजलक्ष्मीः, विजयः, भूतिरुत्तरोत्तरवृद्धिः, नीतिर्नयः ध्रुवा निश्चिता इत्येवं मम मतिर्निश्चयः ।

गीतार्थसंग्रहः श्रीमच्छङ्करेण — "उपायोपेयभावेन निष्ठाद्वयस्य प्रतिष्ठापितत्वात् कर्म्मनिष्ठा परम्परया ज्ञाननिष्ठाहेतुः, ज्ञाननिष्ठा तु साक्षादेव मोक्षहेतुः" इति । तदनुवर्त्तिना श्रीमच्चरद्वरिणा — "धर्मो य उक्तः पूर्व्वेषु चाध्यायेषु तु सोऽत्र वै । वक्तव्यः सर्व्ववेदार्थः परिज्ञानाय निर्म्मलः ॥ .........'नियतस्य तु सन्न्यासः कर्म्मणो नोपपद्यते ।' इत्यादि यत् कृष्णवाक्यं तत्त्वज्ञानिपरं न तत् ॥" इति । श्रीमच्छ्रीधरेण — "भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः । सुखं बन्धविमुक्तिः स्यादिति गीतार्थसंग्रहः ॥ तथाहि — 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ।' 'भक्त्या त्वनन्यया शक्यमहमेवंविधोऽर्जुन ।' इत्यादौ भगवद्भक्तेर्मोक्षं प्रति साधकत्वश्रवणात् तदेकान्तभक्तिरेव मत्प्रसादोत्थज्ञानावान्तरव्यापारयुक्ता मोक्षहेतुरिति स्फुटं प्रतीयते ; ज्ञानस्य च भक्त्यवान्तरव्यापारत्वमेव, 'तेषां सततयुक्तानां भजतां प्रीतिपूर्व्वकम् ।

ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥' 'मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इत्यादिवचनात्। न च ज्ञानमेव भक्तिरिति युक्तम्— 'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्।' 'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः' इत्यादौ। न चैवं सति 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिविरोधः शङ्कनीयः, भक्त्यवान्तरव्यापारत्वात् ज्ञानस्य, न हि काष्ठैः पचतीत्युक्ते ज्वलनानामसाधनत्वमुक्तं भवति। किञ्च 'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥' देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे 'यमेवैष वृणुते तेन लभ्यः' इत्यादि श्रुतिस्मृतिपुराणवचनान्येवं सति समञ्जसानि भवन्ति, तस्माद्भगवद्भक्तिरेव मोक्षहेतुरिति सिद्धम्" इति। श्रीमद्वल्लभसम्प्रदायानुसारिणा श्रीमद्विट्ठलेश्वरेण—"प्रवृत्तिधर्म्यं भगवान्निवृत्तिद्वारा निरूप्य तु। निवृत्तिनिष्ठां सुदृढां निःसन्दिग्धां परिजगौ॥ सांख्ययोगौ रहस्यं च रहस्यतममेव च। अन्योन्याधिक्यनिर्धारो ज्ञानविज्ञानयोरपि॥ स्वरूपविनिर्धारो भक्तानितरनिर्णयः। तद्धेतुर्गुणवैषम्यं सर्वशास्त्रविनिर्णयः॥ इति गीतार्थनिर्धारो यथाभागं विमृश्यते। सांख्ययोगौ निरूप्यादौ मोहमुत्पाद्य फाल्गुनम्। भक्तिपीयूषपानात्तं कृतवानिति संभवः॥" इति। श्रीमज्जगदीशेन तत्कृते गीताप्रदीपे—"ज्ञानस्य हि मोक्षहेतुता कर्मणान्तु ज्ञानद्वारा सत्त्वशुद्धिद्वारा ब्रह्मार्पणद्वारा मोक्षसाधकतेति ज्ञानप्रशंसा न तु कर्मणोऽन्यथासिद्धत्वं भगवदभिप्रायगोचरम्। अतएव 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इत्यादिगीताशास्त्रेऽभयोपवर्णनमेव भगवता विहितम्। उक्तञ्चेदं 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यादिस्मृतेः। तथा च ज्ञानकर्मसमुच्चयप्रतिपादनमेव वेदव्यासस्य गीताशास्त्रोपदेशः" इति। श्रीमन्माध्वानुसारिणा गीतासारार्थसंग्रहाख्य-गीताविवरण-कृता—'स्वतन्त्रास्वतन्त्र-तत्त्वज्ञान-निष्कामधर्माकर्मापादनद्वारा मोक्षो भवेत्" इति। वेदान्तसूत्रभाष्ये श्रीमद्वल्लभ आह—"भगवान्… …ब्रह्मविद्यां निरूप्य स्वक-

पातुतया 'सर्व्वगुह्यतमम्' इत्यादिना भक्तिप्रपत्ती एवोक्तवान्। अतोऽकृत्स्न पूर्व्वं सर्व्वनिर्णया उक्ता इत्यवधेयम्। तथैवार्ज्जुनविषादात् 'करिष्ये वचनं तव इति।" (वे, सू, १अ, २पा, ६सू, भा,) इति। ७८।

इति श्रीमद्भगवद्गीतासमन्वयभाष्येऽष्टादशोऽध्यायः।

---

## उपसंहारः।

न खलु प्रकीर्णानां सिद्धान्तानामेकत्र संग्रहं विना यथायथं तत्त्वावधारणं सम्भवति, अतस्तेषां सुखबोधायोपसंहार आरभ्यते। भिन्नभिन्नसम्प्रदायानां भिन्नभिन्नसिद्धान्तास्तत्तदवबोधितवेदान्तवाक्यमूलका एवेति सर्व्वैस्तैर्वेदान्तसूत्राणां स्वस्वसिद्धान्तानुसारि भाष्यं निरमायि। तेषां सिद्धान्तानामेकदेशित्वं विरोधञ्च पश्यतां न जातु संशयो दार्शनिकसिद्धान्तेषु प्रेक्षावतां कर्त्तव्यः। वाक्यान्येतानि श्रीमद्विज्ञानभिक्षोः साङ्ख्यदर्शनभाष्यप्रवचनचिन्तनीयानि तैः—“‘आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः’ इत्यादिश्रुतिषु परमपुरुषार्थसाधनस्यात्मसाक्षात्कारस्य हेतुतया श्रवणादित्रयं विहितम्। तत्र श्रवणाद्युपायाकाङ्क्षायां स्मर्य्यते।—‘श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः। मत्वा च सततं ध्येय एते दर्शनहेतवः॥’ इति। ध्येयो योगशास्त्रप्रकारेणेति शेषः। तत्र श्रुतिभ्यः श्रुतेषु पुरुषार्थतद्धेतुज्ञानविषयात्मस्वरूपादिषु श्रुत्यविरोधिनीरुपपत्तीः षडध्यायीरूपेण विवेकशास्त्रेण कपिलमूर्त्तिर्भगवानुपदिदेश। ननु न्यायवैशेषिकाभ्यामप्येतेष्वर्थेषु न्यायः प्रदर्शित इति ताभ्यामस्य गतार्थत्वं सगुणनिर्गुणत्वादिविरुद्धरूपैरात्मसाधकतया तद्युक्तिभिरस्य युक्तीनां विरोधेनोभयोरपि दुर्घटं च प्रामाण्यमिति। नैवम्। व्यावहारिकपारमार्थिकरूपविषयभेदेन गतार्थत्वविरोधयोरभावात्। न्यायवैशेषिकाभ्यां हि सुखिदुःख्याद्यनुवादतो देहादिमात्रविवेकेनात्मा प्रथमभूमिकायामनुमापितः; एकदा परसूक्ष्मे प्रवेशासम्भवात्। तदीयञ्च ज्ञानं देहाद्यात्मतानिरसनेन व्यावहारिकं तत्त्वज्ञानं भवत्येव। यथा पुरुषे स्थाणुभ्रमनिरासकतया करचरणादिमत्त्वज्ञानं व्यवहारतस्तत्त्वज्ञानं तद्वत्। अतएव—‘प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्म्मसु। तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत्॥’ इति गीतायां कर्त्तृत्वाभिमानिनस्तार्किकस्याकृ-

स्थविरत्वमिव तत्त्वविन्मोक्षापेक्षयोक्तम् ; न तु सर्वथैवासत्त्वमिति। तथा तदीयमपि ज्ञानमपरवैराग्यद्वारा परम्परया मोक्षसाधनं भवत्येवेति। तत्प्रामाण्यापेक्षयापि च सांख्यज्ञानमेव पारमार्थिकं परवैराग्यद्वारा साक्षान्मोक्षसाधनञ्च भवति ; श्रुतिगीतावाक्येनात्मनः पुंस्त्वविरहस्यैव तत्त्वविच्वसिद्धेः। 'तीर्णो हि तदा भवति हृदयस्य शोकान्' कामादिकं मनः एव सम्भवाः' 'समानः सन्नुभौ लोकावनुसञ्चरति ध्यायतीव लेलायतीव' 'स यत्तत्र किञ्चित्पश्यत्यनन्वागतस्तेन भवति' इत्यादि तात्त्विकश्रुतिशतैः। 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताहमिति मन्यते॥' 'निर्वाणमय एवायमात्मा ज्ञानमयोऽमलः। दुःखाज्ञानमया धर्माः प्रकृतेस्ते तु नात्मनः॥' इत्यादि तात्त्विकस्मृतिशतैश्च। न्यायवैशेषिकोक्तज्ञानस्य परमार्थभूमौ बाधितत्वाच्च। न चैतावता न्यायाद्यप्रामाण्यम्। विवक्षितार्थे देहाव्यतिरिक्तांशे बाधाभावात् 'यत्परः शब्दः स शब्दार्थः' इति न्यायात्। आत्मनि सुखादिमत्त्वस्य लोकसिद्धतया तत्र प्रमाणान्तरानपेक्षणेन तदंशस्यानुवादत्वाच्च शास्त्रतात्पर्याविषयत्वमिति। स्यादेतत्। न्यायवैशेषिकाभ्यामत्राविरोधो भवतु। ब्रह्ममीमांसायोगाभ्यां तु विरोधोऽस्त्येव, ताभ्यां नित्येश्वरसाधनात्; अत्र चेश्वरस्य प्रतिषिध्यमानत्वात्। न चात्रापि व्यावहारिकपारमार्थिकभेदेन सेश्वरनिरीश्वरवादयोरविरोधोऽस्तु सेश्वरवादस्योपासनापरत्वश्रवणादिति वाच्यम्, विनिगमकाभावात्। ईश्वरो हि दुर्ज्ञेय इति निरीश्वरत्वमपि लोकव्यवहारसिद्धमैश्वर्यवैराग्याद्यनुवदितुं शक्यत आत्मनः सगुणत्वमिव, न तु क्वापि श्रुत्यादावीश्वरः स्फुटं प्रतिषिध्यते येन सेश्वरवादस्यैव व्यावहारिकत्वमवधार्येतेति। अत्रोच्यते—अत्रापि व्यावहारिकपारमार्थिकभावो भवति—'असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम्।' इत्यादिशास्त्रैर्निरीश्वरवादस्य निन्दितत्वात्। अस्मिन्नेव शास्त्रे व्यावहारिकस्यैवेश्वरप्रतिषेधस्यैश्वर्यवैराग्याद्यर्थमनुवादत्वौचित्यात्। यदि हि लोकायतिकमतानुसारेण नित्येश्वरं न प्रतिषिध्येत, तदा परिपूर्णनित्यनिर्दोषैश्वर्यदर्शनेन तत्र चित्ता-

र्थात् प्रत्यगर्थो हि भिद्यते॥" स्वस्मै प्रकाशमानत्वं प्रत्यक्त्वम्, परस्मै प्रकाशमानत्वं पराक्त्वम्। अतः पराग्भूतमनहमेव प्रत्यग्भूतादहमर्थात् भिद्यमानं बुद्धौ भासते। सत्यम्, किन्त्वहमनहमन्योन्यसम्बन्धेन सिद्धतानुभूयमानेनानुभूतिः संविद्धोद्भूयते तया चाहमर्थस्य स्फूर्त्तिर्भिन्नम्। अन्यथा सद्योजातशिशौ सत्यामप्यहंबुद्धौ न कथं तदा तस्याः सम्यक्-स्फूर्त्तिः? दृश्यते हि क्रमेण चानहंलक्षणानुभाव्यविषयसम्बन्धादनुभूतेरुत्तरोत्तरस्फुरणेनाहमर्थस्यापि तथा। आह च श्रीमद्रामानुजः शारीरकमीमांसाभाष्योपक्रमणिकायाम्—"अस्य कर्त्तुः स्थिरत्वं कर्तृधर्मस्य संवेदनाख्यस्य सुखदुःखादेरिव उत्पत्तिस्थितिनिरोधाश्च प्रत्यक्षमीक्ष्यन्ते। कर्त्तृस्थैर्य्यं तावत् स एवायमर्थः पूर्व्वमेवानुभूत इति प्रत्यभिज्ञाप्रत्यक्षसिद्धम्। अहं जानामि, अहमज्ञासिषम्, ज्ञातुरेव ममेदानीं ज्ञानं नष्टमिति च संविदुत्पत्त्यादयः प्रत्यक्षसिद्धा इति कुतस्तदैक्यम्। एवं क्षणभङ्गिन्याः संविद आत्मत्वाभ्युपगमे पूर्व्वेद्युर्दृष्टं परेद्युरिदमहमदर्शमिति प्रत्यभिज्ञा च न घटते। अन्येनानुभूतस्य न ह्यन्येन प्रत्यभिज्ञानसम्भवः। क्षिप्तानुभूतेरात्मत्वाभ्युपगमे तथा नित्यत्वेऽपि प्रतिसन्धानासम्भवस्तदवस्थः। प्रतिसन्धानं हि पूर्व्वापरकालस्थायिनमनुभवितारमुपस्थापयति नानुभूतिमात्रम्" इति। अयमनुभविताहमर्थः प्रत्यगात्मा न ज्ञप्तिमात्रं ज्ञातेव। श्रीमता शङ्करेणापि 'अस्मत्प्रत्ययविषयः प्रत्यगात्मा' इति भाष्यारम्भे तथापि चरमे 'सर्व्वदुःखविमुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः' (वे, सू, ४अ, १पा, २सू, भा) इति। न केवलमहमनहं व्याहृत्य तज्ज्ञानं स्फुरति, परस्य ज्ञानमपि तथैवेति दर्शितं श्रीमद्रामानुजेन—"लक्षणतः प्रतिपत्त्यं ब्रह्म सकलेतरपदार्थविरोधिरूपम्। तद्विरोधिरूपं सर्व्वमनेन पदत्रयेण व्युदस्यते। तत्र सत्यदं विकारास्पदत्वेनासत्याद्वस्तुनो व्यावर्त्तकम्, ज्ञानपदं चान्याधीनप्रकाशाजडरूपाद्वस्तुनो व्यावर्त्तकम्, अनन्तपदञ्च देशतः कालतो वस्तुतश्च परिच्छिन्नाद्व्यावर्त्तकम्। न हि व्यावृत्तिर्भावरूपोऽभावरूपो वा धर्मः, अपि तु सकलेतरविरोधि ब्रह्मैव, यथा

शोकादेः कार्यादिव्यावृत्तिसत्तास्वपदार्थस्वरूपमेव न धर्मान्तरम् । एवमेकस्यैव वस्तुनः सकलेतरविरोध्याकारतामवगमयदर्थवत्तरमेकार्थमपर्यायञ्च पदत्रयम्'' इति । एवं व्याहृत्या सविशेषत्वेन परःसुधान्सिद्धावपि, न खलु सविधिविशेषत्वं जहाति, सकलसम्बन्धानिरपेक्षत्वात् स्वयं तस्य । न पुनर्जगज्जीवाभ्यां परवस्तुनो निरपेक्षत्वं तयोस्तदन्तर्भूतत्वात् तच्छक्तिविलासत्वात् तदनन्यत्वाच्च । चिन्मात्रमात्मा शक्तिमात्रं प्रकृतिरन्यसम्बन्धविवर्जितमयाः शक्यते चिन्तयितुं स्वतन्त्रत्वपरिग्रहायेत्यत्रापि निर्विशेषवादस्य नात्यन्तनिरवकाशः । कथमुच्यते नात्यन्तनिरवकाश इति ? परतत्त्वादन्यतन्त्रत्वात् स्वातन्त्र्यपरिग्रहस्य कल्पितत्वात् । कथमुक्तं श्रीमच्छङ्करेण—"नेश्वरादन्यः संसारी तथापि देहादिसङ्घातोपाधिसम्बन्ध इष्यत एव घटकरकगिरिगुहाद्युपाधिसम्बन्ध इव व्योम्नः, तत्कृतश्च शब्दप्रत्ययव्यवहारो लोकस्य दृष्टो घटच्छिद्रं करकच्छिद्रमित्यादिराकाशादव्यतिरेकेऽपि, तत्कृता चाकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा, तथेहापि देहादिसङ्घातोपाधिसम्बन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः । दृश्यते चात्मन एव सतो देहादिसङ्घातेऽनात्मन्यात्मत्वाभिनिवेशो मिथ्याबुद्धिमात्रेण पूर्वपूर्वेण । सति चैवं संसारित्वे देहाद्यपेक्षमीक्षितृत्वमुपपन्नं संसारिणः'' (वे, सू, १म, १पा, ५सू, भा) इति ;—प्रदर्शितं तत् पुरस्तात् । इह 'मिथ्याबुद्धिमात्रेण पूर्वपूर्वेण' इति वचनात् जीवस्यानादित्वं नित्यत्वमेवोक्तं ; यथा च "प्रकृतिं पुरुषञ्चैव विद्ध्यनादी उभावपि" (१३।१९) इत्यत्र । 'नोऽतएव' (वे, सू, २।३।१८) इति सूत्रे पुनस्तेन "नित्यचैतन्योऽयमात्मा" इति स्वयमेव प्रतिपादितम् । यद्यपि ब्रह्मणो जीवभाव एवावाभिहितस्तथापि तद्भावेन नित्यावस्थितिरप्यस्य तत्र समर्थिता । जीवशक्तिः प्रकृतिशक्तिश्चापि स्वतन्त्रा तच्छक्तिरेव, अतस्तयोस्तद्भावत्वं न जातु विरुद्धम् । काऽसौ मिथ्याबुद्धिरविद्याऽज्ञानं वा ? "[illegible] साक्षादात्मगोचरैव, शरीरगोचरा त्वहंबुद्धिरविद्यैव, यथोक्तं भगवता पराशरेण—'श्रूयतां चाप्यविद्यायाः स्वरूपं कुलनन्दन । [illegible]

बुद्धिर्या' इति'' इति। सिद्धान्तोऽयं श्रीमद्रामानुजस्य न पुनः श्रीमच्छङ्करकृतान्तेकान्तविरोधी। आह च स शारीरकमीमांसासूत्रोपक्रमणिकायां—"प्राक् च तथाभूतात्मविज्ञानात् प्रवर्त्तमानं शास्त्रमविद्याविषयत्वं नातिवर्त्तते। तथाहि—'ब्राह्मणो यजेत' इत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोऽवस्थादिविशेषाध्यासमाश्रित्य प्रवर्त्तन्ते। अध्यासो नाम अतस्मिंस्तद्बुद्धिरित्यवोचाम। तद्यथा—पुत्रभार्य्यादिषु विकलेषु सकलेषु वाऽहमेव विकलः सकलो वेति बाह्यधर्म्मानात्मन्यध्यस्यति; तथा देहधर्म्मान्—कृशोऽहं कृष्णोऽहं, तिष्ठामि गच्छामि लङ्घयामि चेति; तथेन्द्रियधर्म्मान् मूकः क्लीवो बधिरः काणोऽहमिति; तथान्तःकरणधर्म्मान् कामसङ्कल्पविचिकित्साध्यवसायादीन्। एवमहंप्रत्ययिनमशेषस्वप्रचारसाक्षिणि प्रत्यगात्मन्यध्यस्य तञ्च प्रत्यगात्मानं सर्व्वसाक्षिणं तद्विपर्य्ययेणान्तःकरणादिष्वध्यस्यति। एवमयमनादिरनन्तो नैसर्गिकोऽध्यासो मिथ्याप्रत्ययरूपः कर्त्तृत्वभोक्तृत्वप्रवर्त्तकः सर्व्वलोकप्रत्यक्षः।'' इति।

अतस्मिंस्तद्बुद्धिरिति मिथ्याप्रत्ययरूपोऽध्यासोऽनादिरनन्तो नैसर्गिक इत्युक्तिर्बन्धकारणस्याज्ञानस्य नित्यत्वं दर्शयति। न खलु मन्तव्यं माध्वमतसंस्कारकाणामर्व्वाचीनानामाचार्य्याणां विरोधि मतमिदमिति। तेऽप्याहुर्भागवतामृते—"सच्चिदानन्दरूपाणां जीवानां कृष्णमायया। अचिन्त्या विद्यया तत्त्वविस्मृत्या संसृतिभ्रमः॥" टीका च—"अविद्यया यत् संसारित्वं तदपि भ्रमात्मकमेवेत्यर्थः। विचारेण तेषामपि संसारित्वासम्भवात्। कथम्? "मुक्तौ स्वतत्त्वज्ञानेन मायापगमतो हि सः। निवर्त्तेत घनानन्दब्रह्मांशानुभवो भवेत्॥" टीका च—"तस्यांश आत्मस्वरूपं तदनुभवो भवेदिति मुक्तौ सुखांशमात्रावाप्तिरिति सिद्धम्। यद्यपि भक्ता अपि ईदृशस्वरूपास्तथापि तेषां भगवद्भजनेन तच्चरणानुभवाद्भक्तिसुखावाप्तिरिति मुक्तेभ्यो विशेषो ज्ञेयः" इति। कृतः सिद्धजीवस्य भगवदंशत्वं तत्रैवोक्तम्—"अनादिसिद्धया शक्त्या चिद्विलासस्वरूपया। महायोगाख्यया तस्य सदा ते भेदितास्ततः॥ अतस्त-

त्वादभिन्नास्ते भिन्ना अपि सतां मताः। मुक्तौ सत्यामपि प्रायो भेद-स्तिष्ठत्यतो हि सः॥" टीका च—"तस्य श्रीभगवतः शक्त्या ते जीवा-स्तत्त्वानि ततः परब्रह्मरूपाद्भगवत एव सदा भेदिनाः अंशत्वेन पृथ-ग्भूताः सन्ति। कीदृश्या? अनादिसिद्धया अनादित्वेन सिद्धयेत्यर्थः। अतो जीवतत्त्वानामप्यनादिसिद्धत्वम्। पुनः कीदृश्या? चित् चैतन्यं तस्य विलासो वैभवं शोभातिशयं वा स एव स्वरूपं तत्त्वं यस्या इति। तेषामपि चैतन्यविभूतिरूपत्वेनामायिकत्वम्। पुनः कीदृश्या? अघ-टनघटनचातुर्य्यविशेषेण महायोग इत्याख्या यस्यास्तया। तथा च श्रीभगवद्गीतासु 'नाहं प्रकाशः सर्व्वस्य योगमायासमावृतः' इत्यादि। अनेनांशांशित्वासम्भवेऽपि तथा सम्पादनसामर्थ्यमप्युक्तमिति दिक्। अत-स्तस्मात् तच्छक्तिविशेषकृतभेदात् अस्मात् परब्रह्मणोऽभिन्नाः सच्चिदा-नन्दत्वादिब्रह्मसाधर्म्यवत्त्वात्, अंशत्वादिना भिन्ना अपि। अत्रापि पूर्व्वोक्तं रवेरंशा इत्यादि दृष्टान्त एवं द्रष्टव्यम्। यथा रव्यादेः सका-शात् अंशादयः प्रकाशकत्वादितत्सद्गुणयोगादभिन्ना अंशत्वेन नानात्वा-द्यवस्था भिन्नाश्च तथेति। अतः स नितरसिद्धो भेदस्तिष्ठत्येव। एवं सत्येव 'मुक्ता अपि लीलया विग्रहं कृत्वा भगवन्तं भजन्ति' इति श्रीशङ्कराचार्य्यभगवत्पादानां वचनम्।" इति। अयमेव भेदाभेद-वादः श्रीमता जीवेन सर्व्वसंवादिन्यां "स्वमते त्वचिन्त्यभेदाभेदावेव अचिन्त्यशक्तिमयत्वात्" इत्युक्तः। तत्त्वमस्येवमुक्तं भागवतामृते—"सदा वैजात्यमात्मानां जीवानां तत्त्वतस्तथा। अंशत्वनाप्यभिन्नत्वा-द्विजातीयभिदा मता॥ अस्मिन् हि भेदाभेदाख्ये सिद्धान्तेऽस्मिन् सुसम्मते। युक्त्यावतारिते सर्व्वमनवद्यं ध्रुवं भवेत्॥ सदा प्रमाण-भूतानामस्माकं महतां तथा। वाक्यानि व्यवहाराश्च प्रमाणं खलु सर्व्वथा॥" टीका च—"अद्वयमितरपि साधयन्ति सदेति। सदा वैजात्यं परिच्छिन्नत्वादिभेदेन विजातीयत्वम्—आत्मानां जीवानां जीव-तत्त्वानां तत्त्वतः परमार्थतः अभिन्नत्वाद्भेदाभावात् चिद्विलासशक्तिकृत-त्वेन तेषामपि तादृशत्वात्………अंशत्वेनाप्यभिन्नत्वात् विजातीय-

रूपा भिदा मता नष्टा। अस्मिन्नुक्तप्रकारके सिद्धान्तन्यायविशेषे अस्माकं श्रीभगवद्भक्तिपराणां सुसम्मते सुतरां विचारैकावतारिते व्याख्याद्वाराभिव्यञ्जिते सर्वमुक्तमनुक्तमपि भक्तिमार्गविषयकं व्याख्यातं निर्गतमवद्यं दोषो यथा तादृशं भवति ध्रुवं निखिलं सर्वसन्देहजात-निरसनसामर्थ्यात्। एवमेव ब्रह्मण एव उत्पद्यन्ते तस्मिन्नेव लीयन्ते इत्यतो जीवानां तत्त्वतो ब्रह्मणा सहाभेदं ये केचिन्मन्यन्ते तेषामपि मते मुक्तौ ब्रह्मणोऽशेषस्वरूपानुभवाभावात् सुखसम्पत्क्रमेण सिध्यति। तथाहि यथा समुद्रस्य प्रदेशादेकस्मादेव जायमानास्तरङ्गा एकस्मिन्नेव देशे लीयमाना जलमयत्वादिना समुद्रादभिन्ना गाम्भीर्यरत्नाकरत्वादि-गुणाभावाद्भिन्नाश्च केवलं तस्मिन् लयात् पृथक्त्वेनादृश्यमाना ऐक्यं गताः समुद्रस्वरूपं प्राप्ता इत्युच्यते, तथा स्वकारणे ब्रह्मणि तेजआदिस्थानीये सुतरां लीयमाना जीवा ब्रह्मैक्यं गता इत्युच्यते, न त्वपरिच्छिन्नसुखघन ब्रह्मताप्राप्तिस्तेषां स्वभावेनैव परिच्छिन्नत्वात्, ततो मुक्तावपि पृथग्दर्श-नाद्भिन्नत्वं कस्मिंश्चिद्विभागे परिच्छिन्नत्वेन लीनतयावस्थानादभि[illegible]-त्वञ्च। अतएव कस्यचिन्मुक्तस्य श्रीभगवत्कृपाविशेषेण भक्ति[illegible] सच्चिदानन्दशरीरधारणार्थं पुनः पुनः पृथक्त्वतावाप्तिः सम्भवती[illegible]वेव निरूपितम्। एवं सत्येव 'सत्यपि भेदापगमे नाथ तवाहं न मामकी-नस्त्वम्। सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः' इति श्रीम-च्छङ्कराचार्यभगवत्पादानां भेदाभेदन्यायोपबृंहितं वचनं सम्यगुपप-द्यते। अविद्याकृतजीवत्वभेदे विनष्टे सति तदीयत्वेन पुनर्भेदस्य सिद्धेः, अन्यथा परमैक्यापत्त्या 'नाथ तवाहम्' इत्याद्युक्तिर्नैव सङ्गता स्यादिति दिक्।" इति। भेदाभेदवादमुद्दिश्य श्रीमद्रामानुज आह—"भेदा-भेदवादे तु ब्रह्मण्येवोपाधिसंसर्गात् तत्प्रयुक्ता जीवगता दोषा ब्रह्मण्येव प्रादुःष्युरिति। निरस्तनिखिलदोषकल्याणगुणात्मकब्रह्मात्मभावोपदेशा हि विरोधादेव परित्यक्ताः स्युः। स्वाभाविकभेदाभेदवादेऽपि ब्रह्मणः स्वत एव जीवभावाभ्युपगमात् गुणदोषाश्च स्वाभाविका भवेयुरिति निर्दोषब्रह्मतादात्म्योपदेशो विरुद्ध एव" इति। श्रीचैतन्यानुवर्त्तिना-

माध्वाचार्याणां भेदाभेदवादे—"नित्यसिद्धास्ततो जीवा भिन्ना एव यथा रवेः । अंशवो विस्फुलिङ्गाश्च वह्नेर्भङ्गाश्च वारिधेः ॥" इति रवेरंशवो-ऽग्नेर्विस्फुलिङ्गाः समुद्रस्य तरङ्गा इति दृष्टान्तेन 'अभिन्नाः सच्चिदानन्द-त्वादिब्रह्मसाधर्म्यवत्त्वात्' इत्युक्तत्वात् स्वरूपगतोऽभेदः परिच्छिन्नत्वा-दिना भेदोऽवगम्यते, अन्यथा तेषां श्रौतिविरोध एव स्यात्—"न ताव-दाद्यस्तदोपाधिपरिच्छेदपक्षे तत्परिच्छिन्नो ब्रह्मखण्डोऽणुरूपो जीवः, अच्छेद्यत्वादखण्डत्वाभ्युपगमाच्च ब्रह्मणः, आदिमत्त्वापाताच्च जीवस्य ; अत एकस्यैव वस्तुनो द्वैधीकरणं छेदनम् । अथाच्छिन्नएवाणुरूपो-पाधिकसंयुक्तो ब्रह्मप्रदेश इति चेत्, उपाधौ गच्छत्युपाधिना सुसंयुक्तब्रह्म-प्रदेशाकर्षणायोगादनुक्षणमुपाधिसंयुक्तब्रह्मप्रदेशभेदात् क्षणे क्षणे बन्ध-मोक्षौ स्याताम् । अणोपाधिसंयुक्तं ब्रह्मस्वरूपमेव जीवः, तर्ह्यनुपहित-ब्रह्मप्रदेशासिद्धः स्यात्, जीवस्यैकत्वञ्च, 'य आत्मनि तिष्ठन्' इत्यादि श्रुतिविरोधः, 'शब्दविशेषात्' इत्यादि न्यायविरोधश्च सर्वत्र । अथ ब्रह्माधिष्ठानमुपाधिरेव जीवः, तदेवं मोक्षे जीवनाशः स्यात् तस्मा-न्नासौ पक्षः ।" (स, स, प, स,) इति । रवेरंशवोऽग्नेर्विस्फुलिङ्गाः समुद्रस्य तरङ्गा इति दृष्टान्तः प्रयत्नं विना भगवच्छिच्छक्तेर्जीवानामभि-व्यक्तिमेव दर्शयति जगद्वत्, यतः—"यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः सम्भवन्ति । यथा सतः पुरुषात् केशलोमानि तथा-क्षरात् सम्भवतीह विश्वम् ॥" (मु, उ, १।१।७) इत्येषा श्रुतिः "यथा सुदीप्तात् पावकात् विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः । तथा-क्षरात् विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति ॥" (मु, उ, २।१।१ ) इत्यस्या न विरोधिनी । पावकस्थानीयात् चित्स्वरूपात् विस्फुलिङ्गस्थानीयानां क्षुद्रचितामभिव्यक्तिरिति तत्त्वम् । "जीवस्वरूपं यद्वस्तु परं ब्रह्म तदेव चेत्" इत्युक्त्वा "तथापि जीवतत्त्वानि तस्यांशा एव सम्मताः । घनतेजःसमूहस्य तेजोजालं यथा रवेः ॥" इति यत्रांशत्वं जीवस्य निर्णीतं तत्क्षुद्रत्वमेव व्यनक्ति, अन्यथा तेषां स्वसि-द्धान्तहानिरुपतिष्ठते । "जीव ईश्वरस्यांशो भवितुमर्हति, यथाग्नेर्वि-

स्फुलिङ्ग: । अंश इवांश: । न हि निरवयवस्य मुख्योऽंश: सम्भवति" (वे, सू, २अ, ३पा, ४३सू, श, भा) इति । "तत्सम्बन्धित्वमेव तदंशत्वम्" इति श्रीमज्जयतीर्थ: (वे, सू, २अ, ३पा, ४३सू, मा, भा, टी) इति । "स्मरन्ति च" (२अ, ३पा, ४६सू,) इति सूत्रे श्रीमद्रामानुज: —"एवं प्रभाप्रभावद्रूपेण शक्तिशक्तिमद्रूपेण शरीरात्मभावेन चांशांशिभावं जगद्ब्रह्मणो: पराशरादय: स्मरन्ति" इति ।

श्रीमद्वल्लभस्तु प्रकृतिर्जीवश्च भगवदंश इति मन्यते, "नामरूपयो: कार्य्यरूपत्वात् प्रकृतेरपि स्वमते तदंशत्वात्..................नानात्वं त्वैच्छिकमेव" ( वे, सू, १।१।४ सू, भा, ) "न तु ब्रह्मणो निरवयवत्वात् कथं जीवस्यांशत्वमिति वाच्यम् । न हि ब्रह्म निरंशं सांशमिति क्वचिल्लोके सिद्धम्, वेदैकसमधिगम्यत्वात् । सा च श्रुतिर्यथोपपद्यते तथा तदनुसरणेन वेदार्थज्ञानार्थं युक्तिर्वक्तव्या ।" ( वे, सू, २।३।४३ सू, भा, ) इति । भगवदंशत्वेऽपि कथं जीवस्य दु:खित्वमित्यस्य हेतुं प्रदर्शयितुं स आह "अस्य जीवस्य ऐश्वर्य्यादि तिरोहितम्, तत्र हेतु:, पराभिध्यानात्—परस्य भगवतोऽभितो ध्यानं स्वस्यैतस्य च सर्व्वतो भोगेच्छा तस्मात् । ईश्वरेच्छया जीवस्य भगवद्धर्मतिरोभाव: । ऐश्वर्य्यतिरोभावाद्दीनत्वं पराधीनत्वम् ; वीर्य्यतिरोभावात् सर्व्वदु:खसहनम् ; यशस्तिरोभावात् सर्व्वहीनत्वम् ; श्रीतिरोभावात् जन्मादिसर्व्वापद्विषयत्वम् ; ज्ञानतिरोभावात् देहादिष्वहंबुद्धि. सर्व्वविपरीतज्ञानञ्चापस्मारसहितस्यैव ; वैराग्यतिरोभावात् विषयासक्ति: । बन्धस्तुर्णां कार्य्यौ विपर्य्ययो द्वयो: । तिरोभावादेव नान्यथा । युक्तोऽयमर्थ: । एकस्यैकांशप्राकट्येऽपि तथाभावात् । आनन्दांशस्तु पूर्व्वमेव तिरोहितो येन जीवभाव: । अतएव काममय:, अकामरूपत्वादानन्दस्य । निद्रा च सुतरां तिरोभावकर्त्री भगवच्छक्ति:, अतोऽस्मिन् प्रस्तावे जीवस्य धर्मतिरोभाव उक्त: । अन्यथा भगवत ऐश्वर्य्यादिलीला निर्व्विषया स्यात् ।" ( वे, सू, ३।२।५ सू, भा) इति । प्रकृतेर्जीवस्य च भगवदंशत्वात् तद्रूपत्वात् (वे, सू, १।१।

११ सू, भा,) सूत्रे पुनर्जीवस्य 'तत्तुल्यत्वात्' 'सर्वस्य शुद्धब्रह्मत्वं' (वे, सू, १।१।१० सू, भा) प्रतिपादितं तेन, अतोऽस्य मतं शुद्धाद्वैतवादत्वेन प्रसिद्धिमगमत्। उक्तञ्च तेन "आदिमध्यावसानेषु शुद्धब्रह्मण एवोपपादनात् सर्वेषां वेदान्तानां ब्रह्मसमन्वयः" (वे, सू, १।१।१० सू, भा) इति। इदं शुद्धब्रह्म नित्यलीलाविशिष्टम्; तथाहि—"भक्तेभ्यः स्वरूपानन्ददानाय 'लोकवत्तु लीलाकैवल्यम्' इति न्यायेन या लीलाः करोति……ता भक्ताः पश्यन्तीति द्वितीयसूत्रेणोक्तम्। अतएव लीलाया अनेकरूपत्वात् ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेनैकरसत्वनिरूपणाच्छुद्धब्रह्मधर्मत्वं न सम्भवतीति शङ्कानिरासाय कैवल्यमित्युक्तम्। 'साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतिषु या अन्यधर्मराहित्यलक्षणा केवलतोक्ता सा लीलात्मिकैव। लीलाविशिष्टमेव शुद्धं परं ब्रह्म न कदाचित् तद्रहितमित्यर्थः पर्यवस्यति। तेन स्वरूपात्मकत्वं लीलायाः पर्यवस्यति तेन च नित्यत्वम्।" (वे, सू, ४।४।१४सू, भा) इति। न हि रूपवत्तां विना लीला सम्भवति, रूपन्तु तस्य निर्गुणमेव। यथा "'प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः' इत्याद्यधिकरणैः 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिश्रुतिभिश्च प्राकृता एव धर्मा निषिध्यन्ते ब्रह्मण्यप्राकृता एव बोध्यन्ते, अन्यथा तद्बोधनमेव न स्यात्, निषेधवाक्य एव तद्बोधनमपि न स्यात्—'एतस्यैवाक्षरस्य प्रशासने' इत्यादिरूपम्। अतोऽचिन्त्यानन्तशक्तेर्भगवतः, का वा कार्याक्षमता यया प्राकृतान् गुणानङ्गीकुर्यादतो निर्गुणमेव सर्वत्र भगवद्रूपमिति मन्तव्यम्" (वे, सू, ४।४।१६ सू, भा) इति। लीलायाः स्वरूपात्मकत्वे रूपस्य च निर्गुणत्वे श्रुतिवर्णितं हिरण्यश्मश्रुहिरण्यकेशादिकं स्वरूपमेव। अतएवाह सः—"हिरण्यशब्द आनन्दवाची, लोकेऽपि तस्यानन्दसाधकत्वात्। अतः केशादयोऽपि सर्वे आनन्दमया एव, तादृशमेव ब्रह्मस्वरूपमिति मन्तव्यम्।……'माया ह्येषा मया सृष्टा' इत्यादि भगवद्वाक्यं भगवन्मायया भगवन्तमन्यथा पश्यतीत्याह न तु भगवानेव मायिक इति। शरीरे सति जीवत्वमि-

वेति निश्चयः ।" (वे, सू, १।१।२० सू, भा) इति । एवं शुद्धाद्वैतवादत्वेऽपि यावन्न ब्रह्मसायुज्यं तस्मिन् लयो वा, न तावद्द्वैतविलोपः। अतस्तेनोक्तम्—"यच्चोक्तं ब्रह्मविदो द्वैतदर्शनानुपपत्त्या कामभोगासम्भव इति तत्राप्युच्यते। 'यत्र त्वस्य सर्व्वमात्मैवाभूत्' इति श्रुतिरखण्डब्रह्माद्वैतभाने ब्रह्मविदः प्रापञ्चिकभेदादर्शनं वदति, न तु प्रपञ्चातीतार्थदर्शनं बोधयति निषेधति वा। पुरुषोत्तमस्वरूपन्तु यावत् स्वधर्मविशिष्टं प्रपञ्चातीतमेवेति तद्दर्शनादौ किमायातम्" (वे, सू, १।१।१२ सू, भा) इति। अपि च "एतेन लौकिकं पूर्व्वदेहं त्यक्त्वा साक्षाद्भगवद्भजनोपयोगिनं भगवद्विभूत्यात्मकं सङ्घातं प्राप्नोत्यादौ" (वे, सू, १।१।१२ सू, भा) इति। अयं भगवद्भजनोपयोगी देहो भगवत्प्रवेशेन सिध्यति, नान्यथा, तद्यथा "न हि तदा नैसर्गिकज्ञानक्रियाभ्यां तथा भोक्तुं शक्तो भवति ; किन्तु भगवांस्तस्मिन्नाविशति यदा तदायमपि तथैव भवति" ( वे, सू, ४।४।१५ सू, भा ) इति। एवमपि कथमस्य श्रीमता शङ्करेण महान् विरोध इत्यस्य हेत्वन्वेषणे न पुनर्व्याख्यायामस्य प्रयोजनम्। जीवांशे न तयोरस्ति विवादकारणं, यतो ब्रह्मण एव स्वरूपतिरोधानेन जीवत्वमित्यस्मिन्नस्त्युभयोः सम्मतिः। प्रकृतेर्भगवदंशत्वे न केवलं तस्याः सत्यत्वमायाति, जगतोऽपि तद्विलासत्वात् ब्रह्मणो विभूतित्वात् ( वे, सू, १।१।१२ सू, भा ) भगवद्रूपत्वात् (वे, सू, १।१।३१ सू, भा )। श्रीमता शङ्करेण मिथ्यात्वमस्या प्रतिपादितमिति बुद्ध्वा पाषण्डित्वमस्य प्रथयता श्रीमता वल्लभेन निर्व्वल्लभत्वमात्मनो विद्वद्गोष्ठीषु सम्पादितम्। "अपवादार्थत्वात् रज्जुसर्पवदयुक्तार्थकथनेऽपि न दोषः। 'सर्व्वं समाप्नोषि ततोऽसि सर्व्वः' इति स्मृतेश्च चेत्, नैवम्, तथा सति पाषण्डित्वं स्यात्। एतादृशशास्त्रार्थोक्तिकर्त्तुरासुरेषु भगवता गणितत्वात्।" (वे, सू, १।१।४ सू, भा ) इति। "महादेवादयः स्वांशेनावतीर्य्य वैदिकेषु प्रविश्य विश्वासार्थं वेदभागान् यथार्थानपि व्याख्याय सदसद्विलक्षणामसदपरपर्य्यायामविद्यां सर्व्वकारणत्वेन स्वीकृत्य तन्निवृत्त्यर्थं जातिभ्रंशरूपं सन्न्यासपाषण्डं प्रसार्य्य सर्व्वमेव लोकं व्यामोहि-

नवन्तः। व्यासोऽपि कलहं कृत्वा शङ्करं प्राप्य तूष्णीमास। "अतोऽभिना मया सर्व्वतः सदुद्धारार्थं यथाश्रुतानि श्रुतिसूत्राणि योजयता सर्व्वो मोहो निराकृतो वेदितव्यः" (वे, सू, २।२।२६ सू, भा) इति।

अस्त्यथवा नास्ति श्रीमता शङ्करेण वादिनां तादृग्विरोधकारणमिति विचार्य्यमन्यथा सर्व्वेषां वादिनामेकत्वं श्रीमच्छ्रीगाचार्य्यस्य च माहात्म्यं नावभासेत। दृश्यते मायावादीति निन्दा श्रीमच्छङ्करस्य यशोराशिं राहुग्रस्तं चन्द्रमसमिव मलिनीकरोतीति सैव प्रथममपनोदनीया। कासौ माया? अव्याकृतनामरूपा दैवी शक्तिर्माया, तद्यथा—"परमेश्वर्य्याश्च शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽवगमात्, वाक्यशेषेऽपि—'मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम्' इति। 'यो योनिं योनिमधितिष्ठत्येकः' इति च। तस्या एवावगमात् न स्वतन्त्रा काचित् प्रकृतिः प्रधानं नाम अजामन्त्रेणाम्नायत इति शक्यते वक्तुम्। प्रकरणात्तु सैव दैवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्था" (वे, सू, १अ, ४पा, ६सू, भा,); यथा च "सर्व्वज्ञेश्वरस्य आत्मभूते इवाविद्याकल्पिते नामरूपे तत्त्वान्यत्वाभ्यामनिर्व्वचनीये संसारप्रपञ्चबीजभूते सर्व्वज्ञेश्वरस्य मायाशक्तिः प्रकृतिरिति च श्रुतिस्मृत्योरभिलप्येते, ताभ्यामन्यः सर्व्वज्ञ ईश्वरः 'आकाशो वै नामरूपयोर्निर्व्वहिता ते यदन्तरा तद्ब्रह्म' इति श्रुतेः" (वे, सू, २अ, १पा, १४सू, भा) इति। यत्तु तेनोक्तं—"अविद्यात्मिका हि सा बीजशक्तिरव्यक्तशब्दनिर्द्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिर्यस्यां स्वरूपप्रतिबोधरहिता शेरते संसारिणो जीवाः" (वे, सू, १अ, ४पा, ३सू, भा) इति तस्मिन् सर्व्वेषां वादिनां सम्मतिरस्ति। 'ईश्वरेच्छया जीवस्य भगवद्धर्म्मतिरोभावः' इत्युक्तिर्न पुनरस्या विरोधिनी। यदि वदसि असद्वाद एवास्य निन्दाकारणं, तदपि न, स्वयमेव तेनासत्कार्य्यवादस्यायुक्तता प्रदर्शिता—"दधिघटरुचकाद्यर्थिभिः प्रतिनियतानि कारणानि क्षीरमृत्तिकासुवर्णादीन्युपादीयमानानि लोके दृश्यन्ते, न हि दध्यर्थिभिर्मृत्तिकोपादीयते, न घटार्थिभिः क्षीरम्। तदसत्कार्य्यवादो नोपपद्यते" (वे, सू,

२अ, १पा, १८ सू, भा) इति । प्रत्युत सत एव सर्व्वेषु वेदान्तेऽसद्व्यपदेशः प्रागुत्पत्तेः (वे, सू॰, २अ, १पा, १७सू॰, भा) इत्युक्तेः सद्वादस्यैव स्वीकारः। अपि च कारणस्येव कार्य्यस्य जगतस्त्रिषु कालेष्वव्यभिचारः (वे, सू॰, २अ, १पा, १६सू॰, भा) इति तस्य सिद्धान्तः। यद्येवं कथं जगन्मिथ्यावादोत्थापनेन मायावादस्यासद्वादस्य च प्राधान्यं तत्प्रणीते भाष्ये, इति जिज्ञासायां प्रपञ्चविलयेन योगानुकूल्यं भवतीति दृष्ट्वा मिथ्यात्वप्रतिपादनं विना न तत्सिद्ध्यत्यतस्तत्र प्रयत्नस्तस्येत्यसकृदुक्तमस्माभिः। नैषोऽस्माकं कल्पनाप्रसूतो राद्धान्त इति तदुक्तिरेव श्रूयताम्—"ननु द्वैतप्रपञ्चप्रविलयो नियोगविषयो भविष्यति, अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवतीत्यतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः। यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्येत, एवमपवर्गकामस्य प्रपञ्चविलयः। यथा च तमसि व्यवस्थितं घटादितत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यते, एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः। ब्रह्मस्वभावो हि प्रपञ्चो न प्रपञ्चस्वभावं ब्रह्म। तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवतीति। अत्र वयं पृच्छामः—कोऽयं प्रपञ्चविलयो नाम? किमग्निप्रतापसम्पर्कात् घृतकाठिन्यप्रविलय इव प्रपञ्चविलयः कर्त्तव्यः, आहोस्विदेकस्मिन् चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवदविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य इति। तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रलयोपदेशोऽशक्यविषय एव स्यात्। एकेन चादिमुक्तेन पृथिव्यादिप्रविलयः कृतः इदानीं पृथिव्यादिशून्यं जगदभविष्यत्। अथाविद्याध्यस्तो ब्रह्मण्येकस्मिन्नयं प्रपञ्चो विद्यया प्रविलाप्यत इति ब्रूयात्, ततो ब्रह्मैवाविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यम् 'एकमेवाद्वितीयं ब्रह्म', 'तत् सत्यं स आत्मा तत्त्वमसि' इति। तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते तया चाविद्या बाध्यते, ततश्चा-

विद्याध्वस्तः सकलोऽयं नामरूपप्रपञ्चः स्वप्नप्रपञ्चवत् प्रविलीयते" ( वे, सू, ३अ, २पा, २१सू, भा ) इति । "प्रलीयमानमपि चेदं जगत् शक्त्यवशेषमेव प्रविलीयते, शक्तिमूलमेव च प्रभवति" (वे, सू, १अ, ३पा, ३०सू, भा) इत्युक्तरीत्या योगानुकूल्याय सर्वशक्तिब्रह्मधारणायोग्यशक्त्यवशेषप्रपञ्चविलयो न जातु तस्यानभिमतो भवेदिति निर्विवादस्तेन सर्व्वेषां वादिनाम् । न खलु वक्तव्यं ब्रह्म सर्व्वशक्तीति न तेन मन्यत इति, तथा सति महता प्रयासेन तस्य जगत्कर्त्तृत्वं न तेन निर्णीयेत ; "एकस्यापि ब्रह्मणो विचित्रशक्तियोगादुपपद्यते विचित्रो विकारप्रपञ्चः" (वे, सू, २अ, १पा, ३०सू, भा) इति ; "सर्व्वज्ञं सर्व्वशक्ति महामायञ्च तद्ब्रह्म" (वे, सू, २अ, १पा, ३७सू, भा) इति च न स्वीक्रियेत । सिद्धान्ते तु—"भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च । अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥" (७।४) इत्याचार्य्योक्तिः सत्या, न च तद्वाक्यैः सा बाधयोग्या ।

ब्रह्मणा जीवस्य स्वरूपसाम्यमिति स्वीकृते न तिष्ठति विवादकारणं वादिभिरन्यैस्तस्य । "सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवेश्वरविपरीतधर्म्मत्वम् । किं पुनर्जीवेश्वरसमानधर्म्मत्वं नास्त्येव ? न नास्तीति । विद्यमानमपि तु तत् तिरोहितम् अविद्याव्यवधानात् । तत् पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतस्येव दृक्शक्तिरौषधवीर्य्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदाविर्भवति न स्वभावत एव सर्व्वेषां जन्तूनाम्" ( वे, सू, ३अ, २पा, ५सू, भा, ) इत्युक्तिस्तस्य ब्रह्मणा जीवस्य स्वरूपसाम्यमेव दर्शयति । "सत्यं नेश्वरादन्यः संसारी, तथापि देहादिसङ्घातोपाधिसम्बन्ध इष्यत एव घटकरकगिरिगुहाद्युपाधिसम्बन्ध इव व्योम्नः, तत्कृतश्च शब्दप्रत्ययव्यवहारो लोकस्य दृष्टो 'घटच्छिद्र', 'करकच्छिद्रम्' इत्यादिराकाशाव्यतिरेकेऽपि तत्कृता च आकाशे घटाकाशादिभेदमिथ्याबुद्धिर्दृष्टा, तथेहापि देहादिसङ्घातोपाधिसम्बन्धाविवेककृतेश्वरसंसारिभेदमिथ्याबुद्धिः । दृश्यते चात्मन एव सतो देहादि-

सङ्घातेऽनात्मन्यात्मत्वाभिनिवेशो मिथ्याबुद्धिमात्रेण पूर्व्वपूर्व्वेण" (वे, सू, १अ, १पा, ४सू, भा) इत्यादि यत् तेनोक्तं न तत्स्वरूपसाम्यत्वविरोधि। ऐकात्म्यसाधनायैवमुक्तं तेन न पुनः स्वरूपसाम्यं विना सम्भवत्येकात्मता। ऐकात्म्यसाधनन्तु स एवमाह—"यथैतरे गुणाः सर्व्वात्मत्वप्रभृतय आध्यानायाम्नायन्ते तद्वत्। तथा हि विगृह्णन्ति समाम्नातार उभयोव्यारणेन 'त्वमहमस्मि, अहन्तु त्वमसि' इति। तत्रोभयरूपायां मतौ कर्त्तव्यायामर्थवद्भवति; अन्यथा होदं विशेषणोभयाम्नानमनर्थकं स्यात्, एकेनैव क्ततत्वात्। ननूभयाम्नानस्यार्थविशेषे परिकल्प्यमाने देवतायाः संसार्य्यात्मत्वापत्तेर्निकर्षः प्रसज्यतेत्युक्तम्। नैष दोषः। ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्। नन्वेवं सति स एवैकत्वदृढ़ीकार आपद्येत। न वयमेकत्वदृढ़ीकारं वारयामः किन्तर्हि व्यतिहारेणेव द्विरूपा मतिः कर्त्तव्या वचनप्रामाण्यात् नैकरूपेत्येतावदुपपादयामः फलतस्त्वेकत्वमपि दृढ़ीभवति; यथा ध्यानार्थेऽपि सत्यकामत्वादिगुणोपदेशे तद्गुणक ईश्वरः प्रसिद्ध्यति तद्वत्।" (वे, सू, ३अ, ३पा, ३७सू, भा) इति। मुक्तौ जीवो भिन्नाकारं परिहाय ब्रह्मणो नित्यस्वरूपेऽवतिष्ठते—'मुक्तिर्ब्रह्मणो नित्यस्वरूपावस्थानलक्षणा' इति वाचस्पतिः। अतएव हि स आह—"मुक्त्यवस्था हि सर्व्ववेदान्तेष्वेकरूपैवावधार्य्यते। ब्रह्मैव हि मुक्त्यवस्था" (वे, सू, ३अ, ४पा, ५२सू, भा) इति। स्वरूपैक्यवशादेकत्वानुभवः सम्यगेव। दृश्यते चात्र श्रीमच्छङ्करस्य महान् निर्व्वन्धः स्वरूपैक्येऽणुमात्रमपि भेदमसहमानस्य 'एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति' इति न्यायेन। अनेन कारणेन "मम साधर्म्यमागताः" (१४।२) इत्यस्य व्याख्याने "मम परमेश्वरस्य साधर्म्यं मत्स्वरूपतामागताः प्राप्ता इत्यर्थो न तु समानधर्म्मतां साधर्म्यं क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमात् गीताशास्त्रे" इति निरधारि तेन। एवमैकात्म्यसाधनपक्षपातेन यत् सत्यं प्रच्छादितं तेन, अन्येषामाचार्य्याणां वचनतस्तत्तोज्ज्वलं प्रतिभातीति दर्शयामः। श्रीमद्रामानुज आह—"परमात्मानं स्वात्मानमविभागेनानुभवति मुक्तः। कुतः

—'दृष्टत्वात्'—'परं ब्रह्मोपसम्पद्य निवृत्ताविद्यातिरोधानस्य याथात्म्येन स्वात्मनो दृष्टत्वात्। स्वात्मनः स्वरूपं हि 'तत्त्वमसि', 'अयमात्मा ब्रह्म,' 'ऐतदात्म्यमिदं सर्व्वं', 'सर्व्वं खल्विदं ब्रह्म' इत्यादिसामानाधिकरण्यनिर्द्देशैः। 'य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद, यस्यात्मा शरीरं, य आत्मानमन्तरो यमयति स त आत्माऽन्तर्याम्यमृतः,' 'अन्तःप्रविष्टः शास्ता जनानां सर्व्वात्मा' इत्यादिभिश्च परमात्मात्मकं तच्छरीरतया तत्प्रकारभूतमिति प्रतिपादितम्। 'अवस्थितेरिति काशकृत्स्नः' इत्यत्र, अतोऽविभागेनाहं ब्रह्मास्मीत्यनुभवति। साम्यसाधर्म्यव्यपदेशो ब्रह्मप्रकारभूतस्यैव प्रत्यगात्मनः स्वरूपं तत्समिति देवादिप्राकृतरूपप्रहाणेन ब्रह्मसमानशुद्धिं प्रतिपादयति, स च श्रुतिरस्यैवंभूतस्य प्रत्यगात्मनः प्रकारिणा ब्रह्मणा सह तद्गुणानुभवं प्रतिपादयतीति न कश्चिद्विरोधः। ब्रह्मप्रकारतया तदविभागोक्तेर्हि 'सङ्कल्पादेव तच्छ्रुतेः' इत्यादि न विरुध्यते 'अधिकन्तु भेदनिर्द्देशादधिकोपदेशात्' इत्यादि च।" (वे, सू, ४अ, ४पा, ४सू, भा) इति। श्रीमद्भाष्यस्तु मुक्तानां स्वरूपसाम्यमनुक्त्वा भोगसाम्यमुक्तम्, तद्यथा—"ये भोगाः परमात्मना भुज्यन्ते, त एव मुक्तैर्भुज्यन्ते ;—'यानेवाहं शृणोमि यान् पश्यामि यान् जिघ्रामि तानेवैते इदं शरीरं विसृज्यानुभवन्ति' इति दृष्टत्वाच्चतुर्व्वेदशिखायाम्।" (वे, सू, ४अ, ४पा, ४सू, भा) इति। न हि स्वरूपसाम्यं विना भोगसाम्यं सम्भवतीति भोगसाम्येन स्वरूपसाम्यमेवोक्तं भवति। यच्च तेनोद्धृते भविष्यत्पुराणवचने दृश्यते—"मुक्ताः प्राप्य परं विष्णुं तद्भोगान् लेशतः क्वचित्। बहिष्टान् भुञ्जते नित्यं नानन्दादीन् कथञ्चन॥" यच्च टीकाकृतोक्तम् "अतो मुक्तानां भगवद्भुक्तभोगभोक्तृताद्युक्तं तस्य सर्व्वभोक्तृत्वम्" इति तदपि न स्वरूपसाम्यविरोधि, स्वरूपभूतस्य विन्दोरपि समानत्वमस्ति पूर्णस्वरूपेण। अतएवाह श्रुतिः—"पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥" (बृ, आ, ७।१।१) इति। श्रीमता वल्लभेन स्पष्टमुक्तम्—"मोक्षे सर्व्वस्यापि भगवतापि तुल्यत्वात्" (वे, सू,

१अ, १पा, १०सू, भा) इति। तथाचोक्तं श्रीविज्ञानभिक्षुणा श्रीमता वचनैरेव—"रामाद् भयात् गाढाविष्ट इति बाऽन्यथिति काकोऽप्यु-वेति 'कच्चीऽहम्' इति, 'चिद्वोऽहम्' इति" (वि, सू, २अ, ३पा, ४३सू, भा); "न च दृष्टान्तेन स्वरूपाभेदः सिद्धः, जीवे जीवान्तरस्येवेश्वरभाव-व्यवहारेऽपि नन्तर्भेदस्य सत्त्वात्, इतरथा दृष्टान्तानुपपत्तिः" (वि, सू, ४अ, ४पा, ४सू, भा) इति। प्रतीयमानमपि जगद्यथा ब्रह्मव्यतिरिक्तमेव प्रतीयते तथा स्वरूपसाम्येऽपि जीवतत्त्वं जीवमात्रव्यतिरिक्तमेवान्तर्विंहरति परब्रह्मणः। अतएवाहाचार्यः—"......इतस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूताम्" (७।५) इति। अभ्युपगतञ्च श्रीमता शङ्करेण —"नित्यत्वादीश्वरस्य तत्प्रकृत्योरपि युक्तं नित्यत्वेन भवितुम्, प्रकृति-द्वयवत्त्वमेव हि ईश्वरस्येश्वरत्वं याभ्यां प्रकृतिभ्यामीश्वरो जगदुत्पत्तिस्थि-तिप्रलयहेतुः" इति।

एवं वादमात्रपर्य्यवसितप्रकृतिजीवतत्त्वविषयकमतविरोधपरिहारः सुघट एवेति प्रतिपाद्याधुना ब्रह्मतत्त्वविषयकं वादिनां मतद्वैधं विचा-र्य्यते। जगत्स्रष्टृत्वादिकं ब्रह्मणो न पारमार्थिकमिति मतं प्रच्छन्न-बौद्धवादत्वेन बहुभिरनादृतम्; दृश्यते तत् श्रीमच्छङ्करभाष्ये सुस्पष्ट-मेव। यथा—"अविद्याकृतनामरूपोपाध्यनुरोधीश्वरो भवति, व्योमेव घटकरकाद्युपाध्यनुरोधि। स चात्मभूतानेव घटाकाशस्थानीयानवि-द्याप्रत्युपस्थापितनामरूपकृतकार्य्यकारणसङ्घातानुरोधिनो जीवाख्यान् विज्ञानात्मनः प्रतीष्टे व्यवहारविषये। तदेवमविद्यात्मकोपाधिपरि-च्छेदापेक्षमेवेश्वरस्येश्वरत्वं सर्व्वज्ञत्वं सर्व्वशक्तित्वञ्च न परमार्थतो विद्य-याऽपास्तसर्व्वोपाधिस्वरूपे आत्मनीशित्रीशितव्यसर्व्वज्ञत्वादिव्यवहार उप-पद्यते। तथा चोक्तम्—'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्य-द्विजानाति स भूमा' इति, 'यत्र त्वस्य सर्व्वमात्मैवाभूत् तत् केन कं पश्येत्' इत्यादि च। एवं परमार्थावस्थायां सर्व्वव्यवहाराभावं वदन्ति वेदान्ताः, तथेश्वरगीतास्वपि—"न कर्तृत्वं न कर्म्माणि लोकस्य सृजति प्रभुः। न कर्म्मफलसंयोगं स्वभावस्तु प्रवर्त्तते॥ नादत्ते कस्यचित्पापं

न चैव सुखदं विदुः । अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥" इति परमार्थावस्थायाम् ईशित्रीशितव्यादिव्यवहाराभावः प्रदर्श्यते, व्यवहारावस्थायान्तूक्तः श्रुतावपीश्वरादिव्यवहारः । 'एष सर्व्वेश्वर एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाय' इति ।" (वे, सू, २अ, १पा, १४सू, भा) इति । प्रबोधोदये न केवलं जीवस्य जीवत्वं विलुप्यते, ब्रह्मणः स्रष्टृत्वमपि—तद्यथा—"यदा 'तत्त्वमसि' इत्येवं जातीयकेनाभेदनिर्द्देशेनाभेदः प्रतिबोधितो भवति, अपगतं भवति तदा जीवस्य संसारित्वं ब्रह्मणश्च स्रष्टृत्वम् ; समस्तस्य मिथ्याज्ञानविजृम्भितस्य भेदव्यवहारस्य सम्यग्ज्ञानेन बाधितत्वात् ।" (वे, सू, २अ, १पा, २२सू, भा) इति । उक्तिरेषा वास्तवेन पर्य्यवसन्ना, यतः स ब्रह्म ज्ञानस्वरूपत्वेनासीत् प्रागुत्पत्तेस्तज्ज्ञानविषयं निखिलं जगदासीदिति च स्वीकृतवान्, तद्यथा—"यत्पुनरुक्तं ब्रह्मणोऽपि न मुख्यं सर्व्वज्ञत्वमुपपद्यते नित्यज्ञानक्रियत्वेन ज्ञानक्रियां प्रति स्वातन्त्र्यासम्भवादिति, अत्रोच्यते,—इदं तावद्भवान् प्रष्टव्यः, कथं नित्यज्ञानक्रियत्वेन सर्व्वज्ञत्वहानिरिति । यस्य हि सर्व्वविषयावभासनक्षमं ज्ञानं नित्यमस्ति सोऽसर्व्वज्ञ इति विप्रतिषिद्धम् । अनित्यत्वे हि ज्ञानस्य कदाचिज्जानाति कदाचिन्न जानातीत्यसर्व्वज्ञत्वमपि स्यात् । नासौ ज्ञाननित्यत्वे दोषोऽस्ति । ज्ञाननित्यत्वे ज्ञानक्रियां प्रति स्वातन्त्र्यव्यपदेशो नोपपद्यत इति चेत्, न, प्रततौष्ण्यप्रकाशेऽपि सवितरि दहति प्रकाशयतीति स्वातन्त्र्यव्यपदेशदर्शनात् । ननु सवितुर्दाह्यप्रकाश्यसंयोगे सति दहति प्रकाशयतीति व्यपदेशः स्यात्, न तु ब्रह्मणः प्रागुत्पत्तेर्ज्ञानकर्म्मसंयोगोऽस्तीति विषमो दृष्टान्तः, न, असत्यपि कर्म्मणि सविता प्रकाशत इति कर्त्तृत्वव्यपदेशदर्शनात् । एवमसत्यपि ज्ञानकर्म्मणि ब्रह्मणस्तदैक्षतेति कर्त्तृत्वव्यपदेशोपपत्तेर्न वैषम्यम् । कर्म्मापेक्षायान्तु ब्रह्मणि ईक्षितृत्वश्रुतयः सुतरामुपपन्नाः । किं पुनस्तत् कर्म्म यत् प्रागुत्पत्तेरीश्वरज्ञानस्य विषयो भवतीति । तत्त्वान्यत्वाभ्यामनिर्व्वचनीये नामरूपे अव्याकृते व्याचिकीर्षिते इति ब्रूमः । यत्प्रसा-

दादि योगिनामप्यतीतानागतविषयं प्रत्यक्षज्ञानमिच्छन्ति योगशास्त्रविदः, किमु वक्तव्यं तस्य नित्यसिद्धेश्वरस्य सृष्टिस्थितिसंहृतिविषयं नित्यं ज्ञानं भवतीति । यदप्युक्तं प्रागुत्पत्तेर्ब्रह्मणः शरीरादिसम्बन्धमन्तरेण ईक्षितृत्वमनुपपन्नमिति, न तच्चोदनमवतरति । सवितृप्रकाशवत् ब्रह्मणो ज्ञानस्वरूपनित्यत्वेन ज्ञानसाधनापेक्षानुपपत्तेः । अपि च, अविद्यादिमतः संसारिणः शरीराद्यपेक्षा ज्ञानोत्पत्तिः स्यात्, न ज्ञानप्रतिबन्धकारणरहितस्येश्वरस्य ।" (वे, सू, १अ, १पा, ५सू, भा) इति । यद्येवं कथमिदं पारमार्थिकम् इदं व्यावहारिकमिति भेदेन तत्त्वनिर्णये प्रयत्नः ? निरवयवस्य ब्रह्मणः सावयवत्वदोषपरिहाराय, तद्यथा "ननु शब्देनापि न शक्यते विरुद्धोऽर्थः प्रत्याययितुं निरवयवञ्च ब्रह्म परिणमते न च कृत्स्नमिति । यदि निरवयवं ब्रह्म स्यान्नैव परिणमेत, कृत्स्नमेव वा परिणमेत । अथ केनचित् रूपेण परिणमेत केनचित् रूपेणावतिष्ठेतेति रूपभेदकल्पनात् सावयवमेव प्रसज्येत । क्रियाविषये हि 'अतिरात्रे षोडशिनं गृह्णाति, नातिरात्रे षोडशिनं गृह्णाति' इत्येवञ्जातीयकायां विरोधप्रतीतावपि विकल्पाश्रयणं विरोधपरिहारकारणं भवति पुरुषतन्त्रत्वादनुष्ठानस्य । इह तु विकल्पाश्रयणेनापि न विरोधपरिहारः सम्भवति अपुरुषतन्त्रत्वात् वस्तुनः । तस्माद्दुर्घटमेतदिति । नैष दोषः,—अविद्याकल्पितरूपभेदाभ्युपगमात् । न ह्यविद्याकल्पितेन रूपभेदेन सावयवं वस्तु सम्पद्यते । न हि तिमिरोपहतनयनेनानेक इव चन्द्रमा दृश्यमानोऽनेक एव भवति । अविद्याकल्पितेन च नामरूपलक्षणेन रूपभेदेन व्याकृताव्याकृतात्मकेन तत्त्वान्यत्वाभ्यामनिर्वचनीयेन ब्रह्म परिणामादिसर्वव्यवहारास्पदत्वं प्रतिपद्यते, पारमार्थिकेन च रूपेण सर्वव्यवहारातीतमपरिणतमवतिष्ठते ।" (वे, सू, २अ, १पा, २७सू, भा) इति । नैतावताभिप्रायसिद्धिः, यतो ब्रह्मणः कारणत्वमवश्यमभ्युपगन्तव्यम्, कार्यस्य च प्रत्यक्षस्य स्थितिर्न अस्वीकर्त्तुं शक्या । विवर्त्तो वा परिणामो वा परिकल्पितो न पुनः स्ष्टिरहस्यं निःसंशयं विवृणोति । रहस्यस्य रहस्य-

स्थापनयन मनुष्यबुद्ध्या न कदापि सम्भवति। स्वोक्तमेतत् तेन स्वयं स्फुटतरवाक्येन ;—"विकारावर्त्ति परां देवतां शास्ति शास्त्रम् 'अचक्षुष्क-मश्रोत्रमवाग्मना:' इत्येवं जातीयकम्। कथं सा सर्व्वशक्तियुक्तापि सती कार्य्याय प्रभवेत्, देवादयो हि चेतना: सर्व्वशक्तियुक्ता अपि सन्त आध्यात्मिककार्य्यकरणसम्पन्ना एव तस्मै तस्मै कार्य्याय प्रभवन्तो विज्ञा-यन्ते ; कथञ्च 'नेति' 'नेति' इति प्रतिषिद्ध सर्व्वविशेषाया देवताया: सर्व्वशक्तियोग: सम्भवेदिति चेत्, यदत्र वक्तव्यं तत् पुरस्तादेवोक्तम्। श्रुत्यवगाह्यमेवेदमतिगम्भीरं परं ब्रह्म न तर्कावगाह्यम्। न च यथै-कस्य सामर्थ्यं दृष्टं तथान्यस्यापि सामर्थ्येन भवितव्यमिति नियमोऽ-स्तीति प्रतिषिद्धसर्व्वविशेषस्यापि ब्रह्मण: सर्व्वशक्तियोग: सम्भवति।" (वे, सू, २अ, १पा, ३१सू, भा) इति। अपिच ब्रह्मण: कारणत्वे स्वीकृते सर्व्वज्ञसर्व्वशक्तित्वादिकं तस्मिन्नवश्यमभ्युपगन्तव्यमित्यस्मिन् न तस्यासम्मति:, तद्यथा—"यस्मादस्मिन् ब्रह्मणि कारणे परिगृह्यमाणे प्रदर्शितेन प्रकारेण सर्व्वे कारणधर्म्मा उपपद्यन्ते सर्व्वज्ञं सर्व्वशक्ति महा-मायञ्च तद्ब्रह्म तस्मादनतिशङ्कनीयमिदमौपनिषदं दर्शनमिति।" (वे, सू, २अ, १पा, ३७सू, भा) इति। न पुन: सर्व्वज्ञत्वादिस्वीकारात् कार्य्यसम्बन्धाद्वा तस्मिन् कथञ्चन दोषस्पर्श:, यत: "परमात्मन: स्वरूप-व्यपाश्रयमौदासीन्यं मायाव्यपाश्रयञ्च प्रवर्त्तकत्वम्" (वे, सू, २अ, २पा, ७सू, भा) इति। कार्य्यसम्बन्धेऽपि प्रवर्त्तकत्वेऽपि न तस्य स्वरूपाद्वि-च्युति:—"यथा जीव: संसारदु:खमनुभवति नैवं पर ईश्वरोऽनुभवतीति प्रतिजानीमहे। जीवो ह्यविद्यावेशवशाद्देहाद्यात्मभावमिव गत्वा तत्-कृतेन दु:खेन दु:ख्यहमित्यविद्याकृतं दु:खोपभोगमभिमन्यते, नैवं पर-मेश्वरस्य देहाद्यात्मभावो दु:खाभिमानो वास्ति।.........लौकिकस्यापि पुंस: सम्यग्दर्शनार्थवत्त्वं दृष्टं, किमुत विषयशून्यादात्मनोऽन्यद्वस्त्वन्तर-मपश्यतो नित्यचैतन्यमात्रस्वरूपस्येति। तस्मान्नास्ति सम्यग्दर्शनानर्थक्य-प्रसङ्ग:। प्रकाशादिवदिति निदर्शनोपन्यास:। यथा प्रकाश: सौर्य्य-श्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसम्बन्धात् तेष्वृजुव-

श्रादिभावं प्रतिपद्यमानेषु तत्तद्भावमिव प्रतिपद्यमानोऽपि न परमार्थत-स्तत्तद्भावं प्रतिपद्यते, यथा आकाशो घटादिषु गच्छत्सु गच्छन्निव विभाव्यमानोऽपि न परमार्थतो गच्छति, यथा चोदशरावादिकम्पनात् तद्गते सूर्य्यप्रतिबिम्बे कम्प्यमानेऽपि न तद्वान् सूर्य्यः कम्पते, एवमविद्या-प्रत्युपस्थापिते बुद्ध्याद्युपाध्युपहिते जीवाख्येंऽशे दुःखायमानेऽपि न तद्वा-नीश्वरो दुःखायते” (वे, सू, २अ, ३पा, ४६सू, भा) इति। एवमपि ब्रह्मेशयोर्भेदः परापरत्वादिति तस्याभिप्रायः ;—“यत्राविद्याकृतनाम-रूपादिविशेषप्रतिषेधेनास्थूलादिशब्दैर्ब्रह्म व्यपदिश्यते तत् परम्। तदेव यत्र नामरूपादिविशेषेण केनचिद्विशिष्टमुपासनायोपदिश्यते ‘मनोमयः प्राणशरीरो भारूपः’ इत्यादिशब्दैस्तदपरम्।” (वे, सू, ४अ, ३पा, १४सू, भा) इति। अत्रैवास्य विरोधोऽस्यैर्भाष्यकृद्भिः, ते पुनरपरमेव परत्वेनाऽऽद्रियन् स्वरूपाभिव्यक्तेराधिक्यात्। यदि स्वरूपादन्यत् किञ्चित्ते ब्रह्मणि स्वीकुर्वन्ति, तदा विफलैव वितण्डा। न कुर्वंश्चच्छ्रीमच्छङ्करः, ‘सत्यं ज्ञानमनन्तं ब्रह्म’ (तै, उ, २।१), ‘आनन्दो ब्रह्म’ (तै, उ, ३।६) इति ब्रह्मस्वरूपमस्वीकृत्य किमपि स्वरूपशून्यमवस्तु ब्रह्मत्वेनाऽऽद्रियत्। तद्विरुद्धभाषिभिरपि न जातु स्वरूपातिरिक्तं किमपि कल्पितं वस्तु ब्रह्मेत्यनादिष्टः। यथा हि श्रीमद्रामानुजः—“ ‘अशब्दमस्पर्शम्’ इत्यादि श्रुतिस्तु भूतभौतिकवैलक्षण्यं ब्रह्मणः प्रतिपादयन्ति,” “दिव्यकल्याण-गुणयोगेन सगुणत्वम्, प्राकृतहेयगुणरहितत्वेन निर्गुणत्वम्” (वे, त, सा) इति। श्रीमन्माध्वः—“विष्णोस्तु श्रुत्यैव सर्व्वे विरोधाः परिहृताः— ‘यदात्मको भगवान् तदात्मको व्यक्तिः। किमात्मको भगवान् ज्ञाना-त्मक ऐश्वर्य्यात्मकः शक्त्यात्मक इति।’ ” (वे, सू, २अ, २पा, ४१सू, भा) इति। टीका च—“यदात्मक इत्यादिकया तु तद्वचस्य ज्ञाना-द्यात्मकभगवत्स्वरूपाभिधात्र्या अन्तवत्त्वादिदोषाः परिहृताः” इति। श्रीमद्वल्लभोऽपि—“आह च श्रुतिः स्वयं तथाच प्रज्ञानघनमात्रं...... स्वरूपातिरिक्तानामिन्द्रियाणामभावात्” (वे, सू, ३अ, २पा, १६सू, भा) इति। तथाच श्रीमद्बलदेवो गोविन्दभाष्ये—“ ‘सन्देवेदमासत्यम्,’

'नेह नानास्ति किञ्चन,' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति,' 'यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति। एवं धर्मान् पृथक् पश्यंस्तानेवानुविधावति॥' इति काठश्रुतौ, 'निःशेषपूर्वगुणविग्रह आत्मतन्त्रो निश्चेतनात्मकशरीरगुणैश्च हीनः। आनन्दमात्रकरपादमुखोदरादिः सर्वत्र च स्वगतभेदविवर्जितात्मा॥' इत्यादि स्मृतौ च। गुणगुणिभेदनिषेधात् स्वरूपाद्गुणा न भिद्यन्ते। अतएव ज्ञानादीनां धर्माणां भगवत्स्वरूपात्मता कथ्यते।'' (वे, सू, ३अ, २पा, ११सू, भा) इति। दृश्यमानं जगत् ब्रह्मस्वरूपमात्मत्वेनापि तन्मिथ्यात्वप्रतिपादने यद्यप्यस्य यत्नः, तथापि स्वरूपप्रकाशनतात्पर्येण (वे, सू, १अ, १पा, ११सू, भा) जगति ब्रह्मदर्शनस्य नासौ जातु विरोधी। तथा सति तदनुगौ श्रीमद्भारतीतीर्थविद्यारण्यमुनीश्वरौ नैवमुपदिशेतां ब्रह्मसाधनम्—"आकाशेऽप्येवमानन्दः सत्ताभाने तु सम्मते। वाय्वादिदेहपर्यन्तेष्वप्येवं विभाव्यताम्॥ गतिस्पर्शौ वायुरूपं वह्नेर्दाहप्रकाशने। जलस्य द्रवता भूमेः काठिन्यं चेति निर्णयः॥ असाधारण आकार ओषध्यन्नवपुष्वपि। एवं विभाव्य मनसा तत्तद्रूपं यथोचितम्॥ अनेकधा विभिन्नेषु नामरूपेषु चैकधा। तिष्ठन्ति सच्चिदानन्दा विसंवादो न कस्यचित्॥ निस्तत्त्वे नामरूपे द्वे जन्मनाशयुते च ते। बुद्ध्या ब्रह्मणि वीक्षस्व समुद्रे बुद्बुदादिवत्॥ सच्चिदानन्दरूपेऽस्मिन् पूर्णे ब्रह्मणि वीक्षिते। स्वयमेवावजानाति नामरूपे शनैः शनैः॥" (प, द, १३प, १७—१८श्लो)। "चेतनाचेतनेष्वेषु सच्चिदानन्दलक्षणम्। समानं ब्रह्म भिद्येते नामरूपे पृथक् पृथक्॥ ब्रह्मण्येते नामरूपे पटे चित्रमिव स्थिते। उपेक्ष्य नामरूपे द्वे सच्चिदानन्दधीर्भवेत्॥" (प, द, १३प, ४५।४६श्लो) इति। वस्तुतस्तु यत्तेनोक्तं 'ब्रह्मस्वभावो हि प्रपञ्चः न प्रपञ्चस्वभावं ब्रह्म' (वे, सू, ३अ, २पा, २१सू, भा) इति तदेव सम्यक्। न खलु प्रपञ्चस्वभावेन ब्रह्म निरूपयितव्यं किन्तु ब्रह्मस्वभावेन प्रपञ्चः। किमनेनोक्तं भवति? सत्तादिकं यत् किञ्च स्वरूपानुबन्धि प्रपञ्चे प्रतिभाति, तद्ब्रह्मण एव, न पुनः स्थूलत्वादिकं

अपञ्चगतं कथमपि संभवति । भगवद्गीतास्वपीत्थमेव प्रतीयते अक्षरस्य-रूपावलोकनमेव पदविशेषैः श्रीमत्कृष्णेन, तद्धि निबद्धमाचार्यप्रोक्तेन पद्येन—"परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात् सनातनः । यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया । यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥" (८।२०।२२) इति । अक्षरतोऽन्य अक्षर इति परमपुरुष इति भेदं पश्यता श्रीमता वल्लभेन निरणायि—"सर्वाण्युपा-सनानि कथाचिदक्षररूपाण्येवेति तदुपासकानां परप्राप्तिरेवेति सिद्धम्, तदेव निरूप्यते । ज्ञानमार्गीयाणां भक्तिमार्गीयाणाञ्चाविशेषेणैव फल-मस्तीति प्राप्ते प्रत्याह—'विशेषञ्च श्रुतिर्दर्शयति' । तैत्तिरीये उच्यते —'ब्रह्मविदाप्नोति परम्' इति गूढाभिसन्धिना सामान्यत एतावदुक्त्वा गूढं तदुपादानयत्नातिमात्रत्वमस्मिन्नर्थेऽनुभवैकवेद्यत्वञ्च ज्ञापयन्नाह—'त-देषाऽभ्युक्ता—सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । तत् पूर्वोक्तं मतिमाद्यत्नेनापि सुखीकृत्य एवं वदन् उक्ता तदनुभवकर्तृभि-रिति शेषः । ब्रह्मविद् अक्षरब्रह्मवित् आप्नोति प्राप्नोत्यक्षरमेवा-प्नोति । एतावानर्थो 'यो वेदे'त्यन्तया श्रुत्योक्तः । अथ परमाप्नोती-त्यस्यार्थं कथयति निहितमित्यादिना । अतएव मध्ये क्रियापदमुभय-त्रान्वितत्वज्ञापकत्वमुक्तम् । तत्प्राप्तिश्च मर्यादापुष्टिभेदेन द्वेधा । तत्रादौ मर्यादायामुच्यते । इहायमाशयो ज्ञेयः—'नायमात्मा प्रवचनेन' इति श्रुत्या भगवद्वरणातिरिक्तसाधननिरासः क्रियते पुरुषोत्तमप्राप्तौ । एवं सत्यक्षरब्रह्मज्ञानस्य तत्साधनत्वं उच्यमाने तद्विरोधः स्यात् तेनैवमितदर्थो निरूप्यते । ज्ञानमार्गीयाणामक्षरज्ञानेन अक्षरप्राप्तिस्तेषां तदेकपर्य्य-वसायित्वात्; भक्तानामेव पुरुषोत्तमपर्य्यवसायित्वात् । तदुक्तं भगव-द्गीतासु 'एवं सततयुक्ता ये' प्रश्ने—'मय्यावेश्य मनो ये मां,' 'ये त्वक्षर-मनिर्देश्यम्' ; श्रीभागवते च—'भक्त्याहमेकया ग्राह्यः', 'तस्मान्मद्भक्ति-

पुरुषं' इत्युपक्रम्य 'न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह' इत्या-
दिना । तथा च ब्रह्मविदो भगवान् हृद्गुहे सदा सन्निहितेति । तस्य-
गुरुभावे सति स्वयं तद्धृदि प्रकटीभविष्णुः स्वज्ञानमूलं व्यापि वैकुण्ठं
तद्गुहायां हृदयाकाशे प्रकटीकरोति तत्परमव्योमशब्देनोच्यते । लौ-
किकप्रयोगेण तस्यालौकिकत्वं ज्ञाप्यते । यथा स्वज्ञापितं स्वस्वरूपं
स्वदर्शनयोग्यं भवति, तथाच भगवानपीति ज्ञापनाय निहितमित्यु-
क्तम् । तथा च परमाप्नोतीति विहितिरूपफलादस्य गुहायां परव्योम्नि
निहितं यो वेद स 'नास्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते ब्रह्मैव
सन्ब्रह्माप्येति' इति श्रुत्युक्तरीत्या परमाप्नोतीत्यर्थः सम्पद्यते । अथ भक्त-
पुष्टिमार्गेऽङ्गीकृतस्य व्यवस्थामाह—'सोऽश्नुते' इत्यादिना । अयमत्रा-
भिसन्धिः । यथा स्वयं प्रकटीभूय लोके लीलां करोति तथाऽनुग्रह-
वशात् स्वान्तःस्थितमपि भक्तं प्रकटीकृत्य तस्मै दानातिशयेन तद्वशः सन्
स्वलीलारसानुभवं कारयतीति स भक्तो ब्रह्मणा परब्रह्मणा पुरुषोत्तमेन
सह सर्वान् कामानश्नुते' इति ।………एवं सति ज्ञानमार्गीयाणा-
मक्षरप्राप्तिरेव, भक्तानामेव पुरुषोत्तमप्राप्तिरिति सिद्धम् ।" (वे, सू,
४अ, ३पा, १७सू, भा) इति । अक्षरः पुनर्धामत्वेन तेन निरूपितः,
तद्यथा — "सच्चिदानन्दत्वदेशकालापरिच्छेदस्वप्रकाशत्वगुणातीतत्वा-
दिधर्मवत्त्वेनैव ज्ञानिनामक्षरविज्ञानं, भक्तानामेव पुरुषोत्तमाधिष्ठान-
त्वेन तथेति ज्ञेयम् ।" (वे, सू, ३अ, ३पा, ५४सू, भा) इति । मत-
विरोधोऽयं मूले दृष्टेरभावात् । सर्व्वातीतं सर्व्वान्तर्भावकं सर्व्वगतं
ब्रह्मोपदिश्यते गीतायाम् । तत्प्रथममक्षरत्वेन सर्व्वातीतं, तदनन्तरं
परमपुरुषत्वेन सर्व्वान्तर्भावकं सर्व्वगतं ब्रह्मोपास्यत्वेनोपस्थाप्यते ।
कथमेवं भिन्नपद्यावस्थानं तत्कारणमुक्तमस्माभिः—"प्रथमन्तावत्
सत्तामात्रधारणं विना परमात्मनो विशेषज्ञानं न सम्भवत्यत
आचार्यः 'तस्मात्तु भावोऽन्योऽव्यक्तः' (८।२०) इति सत्तामात्रमुप-
दिष्टवान्, तदनन्तरं 'यस्यान्तःस्थानि भूतानि येन सर्व्वमिदं
ततम्' (८।२२) इति परमपुरुषं ध्येयत्वेनाख्यापयत्" (२५०पृ,)

इति। अयं परमपुरुषः पित्रादिसम्बन्धैरुपास्य इति गीतासम्मतः पन्थाः।

तदेवं वादिनां विवादकारणं वाङ्मात्रेण पर्य्यवसन्नमिति सन्निविभाव्यम्। प्रकृतिर्जीवो ब्रह्मेति तत्त्वत्रयस्यैकमपि परित्यक्तुं न केनापि शक्यम्। कारणब्रह्मणः शक्तिः प्रकृतिः तां विना न तस्य जातु कारणत्वं सिध्यति। कारणत्वमेव भ्रान्तिश्चेत्, भ्रान्तत्वमेव वक्तृत्वेन प्रतिपन्नं भवति, को वा तस्य वचने श्रद्दध्यात्। नैव दोषः श्रीमति शङ्करे कदाप्यारोप्यः, यतः स स्पष्टमाह—"शक्तिश्च कारणस्य कार्य्यनियमार्थ्या कल्प्यमाना नान्या नाप्यसती कार्य्यं नियच्छेत्, असत्त्वाविशेषादन्यत्वाविशेषाच्च। तस्मात् कारणस्यात्मभूता शक्तिः शक्तेश्चात्मभूतं कार्य्यम्।" (वे, सू, २अ, १पा, १८सू, भा) इति। "शक्तिः शक्तात् पृथङ्नास्ति तद्वद्दृष्टेर्न चाभिदा। प्रतिबन्धस्य दृष्टत्वाच्छक्त्यभावे तु कस्य सः॥" (प, द, १३प, ६श्लो) इत्यत्र प्रतिपत्तव्यं कारणस्य ब्रह्मणः कर्त्तृत्वप्रसारणात्तदप्रसारणाच्च न प्रतिबन्धो वा शक्त्यभावो वा; उभयतः शक्तेरेव महती क्रिया कारणेनानन्यायाः, अतएव न जातु सा स्वरूपातिरिक्ता ब्रह्मणीति। जीवः स्वयमात्मनोऽल्पज्ञत्वमल्पशक्तित्वं सर्व्वदैवानुभवति। विना विचित्रतां न स जात्वात्मनि सर्व्वशक्तिमत्त्वं सर्व्वज्ञत्वं विभावयितुमुत्सहेत। "सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवेश्वरविपरीतधर्म्मत्वम्" इत्यादि वदता श्रीमता शङ्करेण नोपेक्षितमिदं तत्त्वमिति मन्तव्यम्, मुक्तौ स्वरूपैक्ये न कस्याप्यसम्मतिः। अपिच जीवार्थमेव सृष्टिः, अन्यथा पूर्णस्य परब्रह्मणो नास्ति तत्र किमप्यात्मप्रयोजनम्। जीवचैतन्यं विना तदैश्वर्य्यं सम्भोक्तुं ज्ञानविषयं वा कर्त्तुं को वापरोऽस्ति। अतएव हि आचार्य्यः प्रकृतिं जीवञ्च ब्रह्मप्रकृतित्वेनाग्रहीत्। श्रीमच्छङ्करस्यान्याप्यवादिनाञ्चासामञ्जस्येन साक्षात्सम्बन्धेन वात्र सम्मतिरस्ति, प्रतिपादितं तत्पुरस्तात्।

भिन्नाभिन्नवादिभिः स्वस्वप्रतिपत्त्यनुसारतः ज्ञानं वा भक्तिर्वा कर्म्मज्ञानसमुच्चयो वा उपायत्वेन स्वीक्रियते। प्रदर्शितमस्माभिस्तेषां युगप-